# देवीषोडशोपचारपूजा

हस्ते पुष्पाक्षतं गृहीत्वा श्रीदेवीं स्मरेत् । ध्यानम्- रक्ताब्धौ रत्नपोते रविदलकमलाभ्यन्तरे सन्निषण्णां रक्तांगीं रक्तमोलिस्फुरितशशिकलां स्मेरवक्त्रां त्रिनेत्राम् । बीजापुरेशपाशांकुशमदनधनुः सत्कपालानि हस्तैः विभ्राणामानतांगीं स्तनभरनमितामम्बिकामाश्रयामः ॥ नीलश्यामलकैरवप्रणुदिनीं हेमन्तशीर्षेश्वरीं हृद्भाषास्मितपार्वणे विदधतीं शूलासिशंखान्विताम् । वासन्तीं कुचकुम्भप्रेमपयसा संस्नापयन्तीं मुदा सन्तोषीं ललितां सदा सुखकरीं श्रीमातरं भावये ॥ प्रतिमुखरटयन्ती सूक्ष्मसिन्दूरकान्तिः पटवटघटग्रामे चित्रपट्टे हसन्ती । प्रियजनसुखशान्तिं श्रीफले दर्शयन्ती स्फुरतु मनसि माता तारिणी प्रेममूर्तिः ॥ पाणिग्रन्थनमिलितो रिपुगणान् निघ्नन्त्यभीक्ष्णं मुहुः विघ्नध्वंसकारिणी निजपदप्राप्रानवन्ती जनान् । भक्तत्राणपरायणाभयकरी विद्वेषिणां सर्वतो भूयान्मे भवभूतये भगवती दुर्गारि गर्वापहा ॥ आगच्छ देवि देवेशि

मर्त्यलोकहितेच्छया । सुव्रतं भवतु शीघ्रं ममपूजां गृहाण भो ॥ आवाहयामि त्वां देवि पूजार्थं शिववल्लभे । दयां कुरु मयि प्रीत्या स्थिरा भव हरप्रिये ॥ आवाहयामि, आवाहिता भव संथापिता भव , सन्निहिता भव , सन्निरुद्धा भव , सम्मुखा भव अवगुण्ठिता भव , व्याप्ताभव , सुप्रसन्ना भव , मम (यजमानस्य ) सर्वाभीष्टफलप्रदा भव । आसनम्- सूर्यायुतनिभस्फूर्ते स्फुरद्रत्नविभूषितम् । सिंहासनमिदं देवि गृहाण हरवल्लभे ॥ मूलमन्त्रं पठित्वा ॐ त्रिगुणात्मिकायै चण्डिकायैनमः , आसनं समर्पयामि । स्वागतम्- स्वागतं कुशलं प्रश्नं पृच्छामि देवि चण्डिके । कल्याणं देहि मे मातः प्रसीद त्वं नमोऽस्तुते ॥ ॐ चण्डिकायै स्वागतम् सुस्वागतम् । पाद्यम्- सुवासितं जलं रम्यं सर्वतीर्थसमुद्भवम् । पाद्यं गृहाण देवित्वं प्रसन्ना भव सर्वदा ॥ ॐ चण्डिकायै पाद्यं समर्पयामि । अर्घ्यम्- शुद्धोदकं च पात्रस्थं गन्धपुष्पादिमिश्रितम् । अर्घ्यं दास्यामि ते देवि गृहाण सुरपूजिते ॥ अर्घ्यं सम० । आचमनीयम्-सुवर्ण्णकलशानीतं चन्दनागरुसंयुतम् ।

गृहाणाचमनं देवि मया दत्तं शुभप्रदे ॥ आचमनं सम०। **मधुपर्कम्**-दध्याज्यमधुसंयुक्तं मधुपर्कं मयानीतम् । गृहाण वरदे देवि नमस्ते भक्तवत्सले ॥ मधुपर्कं सम०। **स्नानम्**- गंगाजलं मयानीतं सुवर्णकलशे स्थितम् । सुगन्धद्रव्यसंयुक्तं गृहाण दुरितापहे ॥ शुद्धोदकस्नानं स०। स्नानान्ते आचमनं स०। **तीर्थस्नानम्**- गंगासरस्वतीरेवा पयोष्णीनर्मदाजलैः । स्नापयमि महादेवि तथा शान्तिं प्रयच्छ मे ॥ तीर्थस्नानं स०। **क्षीरस्नानम्**- कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम् । पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥ क्षीरस्नानं सम०। **दधिस्नानम्**- पयसस्तु समुद्भुतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया देवि स्नानार्थं प्रतिगृह्यताम् ॥ दधिस्नानं स० । **घृतस्नानम्**- नवनीतसमुद्भूतं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥ घृतस्नानं स० । **मधुस्नानम्**- तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु । तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥मधुस्नानं स०।**शर्करास्नानम्**- इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ।

मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ शर्करास्नानं स०। पंचामृतस्नानम्- पयो दधि घृतं चैव मधु च शर्करायुतम् । पंचामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥ पंचामृतस्नानं स०।भृंगारीस्नानम्- आत्रेयी भारती गंगा यमुना च सरस्वती । सरयू गंण्डकी पुण्या श्वेतगंगा च कौशिकी । भोगबती च पाताले स्वर्गे मन्दाकिनी तथा । सर्वाः सुमनसो भूत्वा भृंगारैः स्नापयन्तु ते ॥ तक्षकाद्याश्च ये नागाः पातालतलवासिनः । सर्वे सुमनसो भूत्वा भृंगारैः स्नापयन्तु ते ॥ शुद्धजलेन- सुरास्त्वामभिषिंचन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो प्रभुः॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय वै । आखण्डलोऽग्निर्भगवान्यमोवै नैर्ऋतस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः शेषाः दिक्पालाः स्नापयन्तु ते ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिःश्रद्धा क्षमा मतिः । वुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः॥ एतास्त्वामभिषिंचन्तु राहुकेतुश्च तर्पिताः । ऋषयो मुनयो गावो देवमातर एव च । देवपत्न्यो ध्रुवा नागा

दैत्याश्चाप्सरसां गणाः। अस्त्राणि सर्व शस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः सागराः शैलाः तीर्थानि जलदाः नदाः । देवदानवगन्धर्वाः यक्षराक्षसपन्नगाः । एतास्त्वामभिषिंचन्तु धर्मकामार्थसिद्धये ॥ कुरुक्षेत्रं प्रयागं च अक्षयोवट संज्ञकः । गोदावरी वियद्गंगा नर्मदा मणिकर्णिक । सर्वाण्येतानि तीर्थानि भृंगारैः स्नापयन्तु ते ॥ दुर्गा चण्डेश्वरी चण्डी वाराही कार्तिकी तथा । हरसिद्धा तथा काली इन्द्राणि वैष्णवी तथा ॥ भद्रकाली विशालाक्षी भैरवी सर्वरूपिणी । सर्वाः सुमनसो भूत्वा भृंगारैः स्नापयन्तु ते ॥ शंखजलेन-सर्वेषामधिपो देवः ईशानो नामनामतः । शूलपाणिर्महादेवो भृंगारैः स्नापयन्तु ते ॥ उष्णोदकेन- उष्णं परमं पवित्रं वह्निज्योतिःसमन्वितम् । जीवनं सर्वपापघ्नं स्नानं भवतु तेन ते ॥ पंचकषायोदकेन-जम्वुशाल्मलीवाट्यालं वकुलं वदरीं तथा । एतन्मिश्रिततोयेन स्नापयामि सुशोभने ॥ पंचशस्योदकेन- यवगोधूममुद्गाश्च तिलाश्च धान्यमेव च । एतत्तोयेन देवेशि स्नापयामि प्रसीद मे

॥ रजतजलेन- अम्बिके वरदे देवि जगतां हितकारिणि । रोप्योदकेन देवि त्वां स्नापयामि प्रसीद मे ॥ स्वर्णोदकेन- हिरण्मयेन पूर्णेन रत्नपात्रेण पूरितम् । स्वर्णोदकेन देवि त्वां स्नापयामि सुरेश्वरि ॥ मुक्ताजलेन- स्वातीरुक्षसमुत्पन्नं शुक्तिकागर्भसंभूतम् । मुक्ताजलेन देवि त्वां स्नापयामि महेश्वरि ॥ इक्षुरसेन- मधुरं कोमलं पेयं दिव्यवाससमन्वितम् । इक्षुरसं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥ पुष्पोदकेन- मन्दारचम्पकपद्ममालतीजातीकादिभिः । पुष्पोदकेन देवि त्वां स्नापयामि सुरेश्वरि ॥ सर्वोषधिजलेन- सर्वदा सर्वपापघ्नी अरिष्टानां विघातिका । सर्वौषधिजलेनाद्य स्नापयामि प्रसीद मे ॥ अगरुवारिणा- सुगन्धेन प्रवाहेण मोदेन संभ्रमेण च । अगरुवारिणा भद्रे स्नापयामि सुरेश्वरि ॥ कर्पूरोदकेन- सुरासारसमायुक्तं वारिपात्रेण पूरितम् । कर्पूरायिततोयेन स्नापयामि सुरेश्वरि ॥ चन्दनोदकेन- योऽसौ मलयजो वृक्षः सौगन्धनिलयः सदा । तज्जलस्नानमात्रेण वरदा भव चण्डिके ॥ महाभिषेकः(श्रीसूक्तेन) ॐ हिरण्यवर्णां हरिणीं

सुवर्ण्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मआवह ॥१॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥३॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्ण्णां तामिहोपह्वये श्रियम् ॥४॥ चन्द्रां प्रभासा यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मनेमिं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥ आदित्यवर्ण्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्याऽलक्ष्मीः ॥६॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥७॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यऽहम् । अभूतिमसमृद्धिं च सर्वान् निर्णुद मे गृहात् ॥८॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥ मनसः काममाकूतिं

वाचःसत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥ कर्दमेन प्रजाभूता मयि सम्भ्रम कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरं श्रियं वासयमे कुले ॥१२॥ आर्द्रां पुष्करिणीं पुष्टिं पिंगलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥ आर्द्रां यः करिणीं यष्टिं सुवर्ण्णां हेममालिनीम् ।सूर्य्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतिं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥१५॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । श्रियः पंचदशर्चं च श्रीकामः सततं जपेत् ॥१६॥ **अष्टकलशस्नानम्-** गंगाजलपूरितघटेन- सुरास्त्वामभिषिंचन्तु ब्रह्मविष्णुमहेश्वराः व्योमगंगाम्वुपूर्णेन आद्येनकलशेन तु ॥१॥ वृष्टिजलपूरितघटेन- मरुतश्चाभिषिंचन्तु भक्तिमन्त्रैः सुरेश्वरीम् । मेघाम्बुपरिपूर्ण्णेन द्वितीयकलशेन तु ॥२॥ सरस्वतीजलपूरितघटेन- सारस्वतेन

तोयेन संपूर्ण्णेन सुरोत्तमे । विद्याधराभिषिंचन्तु तृतीयकलशेन तु ॥३॥ समुद्रजलपूरितघटेन- शक्राद्याश्चाभिषिंचन्तु लोकपालाः समागताः । सागरोदकपूर्ण्णेन चतुर्थकलशेन तु ॥४॥ पद्मरेणुपूरितघटेन- वारिणापरिपूर्ण्णेन पद्मरेणुसुगन्धिना पंचमेनाभिषिंचन्तु नागाश्च कलशेन तु ॥५॥ निर्झरोदकपूरितघटेन-हिमवत् हेमकुटाद्याश्चाभिषिंचन्तु पर्वताः। निर्झरोदकपूर्ण्णेन षष्ठेन कलशेन तु ॥६॥ सर्वतीर्थजलपूरितघटेन-सर्वतीर्थाम्बुपूर्ण्णेन कलशेन सुरेश्वरीम् । सप्तमेनाभिषिंचन्तु ऋषयः सप्तखेचराः ॥७॥ चन्दनवासितजलपूरितघटेन-वसवश्चाभिषिंचन्तु कलशेनाष्टमेन तु । अष्टमंगलसंयुक्ते दुर्गे देविनमोऽस्तुते ॥८॥ नारिकेलोदकेन- नारिकेलसमुद्भूतं शीतलं च सुमिष्टकम् । आनीतं तव स्नानार्थं गृहाण परमेश्वरि ॥ सहस्रधारास्नानम्- सागराः सरितः सर्वाः सर्वस्रोत्रो नदास्तथा । सर्वोषधिभिः पापघ्ना सहस्रैः स्नापयन्तु ते ॥ वस्त्रम्- दिव्याम्बरं नूतनं हि नानाचित्रं विचित्रकम् । दीयमानं मया वस्त्रं गृहाण परमेश्वरि

॥ उत्तरीयम्- यामाश्रित्य महामाया जगत्समोहिनी सदा । तस्यै ते परमेशायै कल्पयाम्युत्तरीयकम् ॥ यज्ञोपवीतम्- नवभिःतन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं मया दत्तं गृहाण परमेश्वरि ॥ पादुकायुगलम्- पादुकायुगलं देवि तुभ्यमेतत् निवेदितम् । अत्रावेशय पादाब्जं द्वन्द्वमद्वन्द्वसाधनम् ॥ आभरणम्- अलंकारान् महादिव्यान् नानारत्नविनिर्मितान् । गृहाण देवदेवेशि प्रसीद परमेश्वरि ॥ चामरम्- चमरिपुच्छसंयुक्तं रौप्यदण्डेन मण्डितम् । चामरं चालयिष्यामि प्रसन्ना भव चण्डिके ॥ व्यजनम्- मयुरपिच्छसंयुक्तं ताडपत्रेण निर्मितम् । व्यजनं स्वीकुरु मातः व्यजयमि पदे पदे ॥ दर्पणम्-अरूपाय स्वरूपाय दिव्यरूपाय ते नमः । मुखावलोकनं चास्तु दर्पणं ते निवेदनम् ॥ छत्रम्- आतपवारणार्थाय धात्रा च निर्मितं पुरा । छत्रं तुभ्यं प्रदास्यामि तथा शान्तिं कुरुष्व मे ॥ कंकतिका- शृंगेण रचितां देवि नानाचित्रविचित्रिताम् । कंकतिकां प्रयच्छामि गृहाण हरवल्लभे ॥ शंखाभरणम्- शंखेन रचितां शंखां

वलयाकारशोभिताम् । हस्तालंकरणार्थाय प्रदास्यामि सुरार्चिते ॥ सिन्दूरम्- सिन्दूरमरुणाभासं जपाकुसुमसन्निभम् । भूषणानां च स्फुरणं सिन्दूरं प्रतिगृह्यताम् । कज्जलम्- चक्षुभ्यां कज्जलं रम्यं सुभगे शान्तिकारिके । कर्पूरज्योतिरुत्पन्नं गृहाण परमेश्वरि ॥ कुंकुमम्- कुंकुमं कान्तिदं दिव्यं कामिनीकामसम्भवम् । कुंकुमेनार्चितं देवि प्रसीद जगदीश्वरि ॥ अलक्तकम्- अलक्तं ब्रह्मणा सृष्टं दिव्यरूपं मनोहरम् । स्त्रीणां रूपकरं चैव अलक्तं प्रतिगृह्यताम् ॥ सुवासिततैलम्- चम्पकाशोकवकुल मालतीमोगरादिभिः । वासितं स्निग्धताहेतुः तैलंचारु प्रगृह्यताम् ॥ रक्तचन्दनम्- रक्तचन्दनसम्मिश्रं पारिजातसमुद्भवम् । मया दत्तं गृहाणाशु चन्दनं प्रतिगृह्यताम् ॥ विल्वपत्रम्- अमृतोद्भवं श्रीयुक्तं महादेवप्रियं सदा । पवित्रं ते प्रयच्छामि गृहाण त्वं सुरेश्वरि ॥ पुष्पम्- मन्दारपारिजातादिपाटलीकेतकानि च । जातीचम्पकपुष्पाणि गृहाण परमेश्वरि ॥ गर्भपुष्पम्- पुष्पे तु वसति लक्ष्मीः लक्ष्मीर्वसति पुष्करे । लक्ष्मीश्च वसति सौम्ये

सौमनस्यं सदास्तु मे ॥ द्रोणपुष्पम्- ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदाप्रियम् । तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये ॥ माल्यपुष्पम्- सूत्रेण ग्रथितं माल्यं नानापुष्पसमन्वितम् । श्रीयुक्तं गन्धयुक्तं च गृहाण परमेश्वरि ॥ १०८ विल्वपत्रमाल्यम्- अष्टोत्तरशतसंख्यैः विल्वपत्रैः सुकोमलैः । सूत्रेण ग्रथितं माल्यं गृहाण परमेश्वरि ॥ १०८ मन्दारपुष्पमाल्यम्- सूत्रेण ग्रथितं माल्यं मन्दारपरिवेष्टितम् । अष्टोत्तरशतं युक्तं गृहाण सुरनायिके ॥ ततः अंगपूजा- हस्ते गन्धपात्रं गृहीत्वा ,ॐ ह्रीं दुर्गायै नमः पादौ पूजयामि । ॐ ह्रीं मंगलायै नमः गुल्फौ पूजयामि । ॐ ह्रीं भगवत्यै नमः जंघे पू०। ॐ ह्रीं कौमार्यै नमः जानुनी पू०। ॐ ह्रीं वागीश्वर्यै नमः ऊरू पू०। ॐ ह्रीं वरदायै नमः कटी पू०। ॐ ह्रीं पद्मवनवासिन्यै नमः स्तनौ पू०। ॐ ह्रीं महिषमर्दिन्यै नमः कंठं पू०। ॐ ह्रीं उमायै नमः स्कन्धौ पू०। ॐ ह्रीं इन्द्राण्यै नमः भुजान् पू०। ॐ ह्रीं गौर्यै नमः नाभिं पू० । ॐ वाराह्यै नमः कुक्षि पू०। ॐ चामुण्डायै नमः हृदयं पू० । ॐ ब्रह्माण्यै

नमः मुखं पू० । ॐ कालरात्रै नमः नासिकां पू० । ॐ जगन्मात्रे नमः कर्णौ पू०। ॐ माहेश्वर्यै नमः नेत्रत्रयं पू० । ॐ शिवदूत्यै नमः ललाटं पू० । ॐ शाकम्भर्यै नमः शिरः पू० । ॐ महाकाल्यै नमः स्त्रवांगं पू० । देव्या दक्षिणे सिंहं पू० । वामे महिषं पू० । आवरणपूजा- प्रथमावरणपूजनम्- वामेन तत्त्वमुद्रया तर्पणं दक्षिणेन च ज्ञानमुद्रया पूजनं कुर्यात् । ध्यानम्- मन्दारदामकलितेन्दुजटाकिरीटा सिन्दूररोचिरभिरामवपुस्त्रिनेत्रा । कुन्दावदातवसनांकुशपाशविद्यासन्दोहपंकजकरावतु भारती वः ॥ हुं हुं हुं फट् करालीं शिरसि शवधूलिं मुण्डमालीं विकालीं चुं चुं चुं चण्डमुण्डं कत कत कटितां हैमबालीं शिवालीम् । दुं दुं दुं रिष्टकष्टं दुमु दुमु कवलीं घोरकालस्य कालीं घुं घुं घुं घूर्णनालीं रुणु झुणु झुमितां चण्डिकालीं नमामि ॥ धूम्रांगीं मुक्तकेशीं मसिमलिनमुखीं घोररूपां त्रिनेत्रां व्यस्तैर्हस्तैर्दधानां व्यजनकरधृतां दीप्तमग्नितृणाढ्याम् । हाहाकाराट्टहासामभयवरकरां ज्वालयन्तीं दिशश्च भक्तेभ्यः

प्रेमवद्धां दिशतु प्रतिदिनं भारतीं तां नमामि ॥ संविन्मये परे देवि परामृतरसप्रिये । अनुज्ञां देहि मे मातः परिवारार्चनाय ते ॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे सांगायै सपरिवारायै सवाहनायै सायुधायै सशक्तिकायै श्री महाकालीमहालक्ष्मीमहासरस्वत्यै नमः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीश्रीपादुकां पूजयामि तर्पयामि । ॐ महाकाल्यै नमः श्री० पू० त० । ॐ महालक्ष्म्यै नमः श्री० पू० त० । ॐ महासरस्वत्यै नमः श्री० पू० त० । ॐ गुरवे नमः गुरुशक्तिश्रीपादुकां पू ० त० । ॐ परमगुरवे नमः पू० त० । ॐ परापरगुरवे नमः पू० त० । ॐ परमेष्टिगुरवे नमः पू० त० । ॐ ऐं हृदयाय नमः हृदयशक्तिश्रीपादुकां पू० त०। ॐ ह्रीं शिरसे स्वाहा शिरःशक्तिश्री०पू० त० । ॐ क्लीं शिखायै वषट् शिखाशक्तिश्री० पू० त० । ॐ चामुण्डायै कवचाय हुं कवचशक्तिश्री० पू० त० । ॐ विच्चे नेत्रत्रयाय वौषट् नेत्रत्रयशक्तिश्री० पू० त० ।ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे

अस्त्राय फट् अस्त्रशक्तिश्री० पू० त० । एताः प्रथमावरणदेवताः पूजिताः तर्पिताः सन्तु । पुष्पांजलिमादाय ॐ अभीष्टसिद्धिं मे देहि शरणागतपालिके । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ द्वितीयावरणम्- ध्यानम्- सिन्दूरारुणसुन्दरांगरुचिरा रक्ताम्बरालेपना मन्दारावृतकुन्तला स्मितमुखी गण्डोल्लसत्कुण्डला । ध्येया स्याद् दधती करैः सरसिजं पाशांकुशे पुस्तकं विम्बोष्ठी मणिभूषणा भगवती संक्षोभणी भूतये ॥ त्वं कालि प्रेममूर्ते विवसनवसने कालदेवि प्रशान्ते त्वं नग्ने मुण्डमाले सकलबलधरे कोटियोगिनीयुक्ते । त्वं धूम्रे खड्गहस्ते लहलहरसने ऋद्धिसिद्धिप्रयुक्ते त्वं मातः ब्रह्मरूपेऽभयवरदकरे चण्डीदेवि नमस्ते ॥ पक्षीन्द्रासनसंस्थितां भगवतीं श्यामां पिशंगावृतां शंखं चक्रगदाब्जपाशमसृणीं मालां दधानां पराम् । विद्याभीतिवरप्रदां त्रिनयनामापीनतुंगस्तनीं देवीं विष्णुमयीं समस्तजननीं ध्यायामि तामम्बिकाम् ॥ ॐ सावित्र्या सह विधात्रे नमः विधातृशक्तिश्री० पू० त० । ॐ

श्रिया सह विष्णवे नमः विष्णुशक्तिश्री० पू० त० ।ॐ उमया सह शिवायनमः शिवशक्तिश्री० पू०त० । ॐ हुं महिषाय नमः महिषशक्तिश्री० पू० त० । द्वितीयावरणदेवताः पू० त० सन्तु । अभीष्टसिद्धिं----। भक्त्या—द्वितीयावरणार्चनम् ॥

तृतीयावरणम्- ध्यानम्- बन्धूकारुणविग्रहां त्रिनयनां रक्ताम्बरालेपनां चञ्चत्काञ्चनकुण्डलां सवरदां पाशांकुशे बिभ्रतीम् । नीहारामलहारकुंकुमरसैराताम्रकम्रस्तनीं ध्यायेद् तां तु कपर्दचन्द्रशकलां सव्याभयां मालिनीम् ॥ गौरांगीं शरदिन्दुसुन्दरमुखीं राजीवहारान्वितां सौवर्णासनसंस्थितां त्रिनयनां नृमुण्डमालावृताम् । नृत्यन्तीं मदिरामहासुखकरीं पेपीयमानाऽमृतां रुद्राणीं कटकेश्वरीं गुणमयीं श्रीचण्डिकां पूजये ॥ ध्यायेत्तां भावरूपां सकललिपिमयीं लोचनाम्भोजयुग्मां शुक्लालंकारभूषां शशिमुकुटजटाजूटयुक्तां प्रसन्नाम् । विद्यामुद्राव्याकुम्भान् वरमपिदधतीं शुक्लपट्टोत्तरीयां वाग्देवीं पंचवक्त्रां कुचभरनमितां चिन्तयेत्साधकेन्द्रः ॥ ॐ ऐं नन्दजायै नमः

नन्दजाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ॐ ह्रीं रक्तदन्तिकायै नमः पू० त० । ॐ क्लीं शाकम्भर्यै नमः पू० त० । ॐ दुं दुर्गायै नमः पू० त० । ॐ हुं भीमायै नमः पू त० । ॐ ह्रीं भ्रामर्यै नमः पू० त०। ॐ तृतीयावरणदेवताः पू० त० सन्तु । अभीष्ट----। तृतीयावरणार्चनम् ॥ चतुर्थावरणम्- ध्यानम्- देवी कुन्देन्दुगौरी स्फुरदमृतकलाहारिहाराभिरामा ध्येया मालेयहृद्यं वपुरपि दधती लेखनीं चाक्षसूत्रम् । सौधं कुम्भं च विद्यानिधिमपि जलजं जाटजूटाहितेन्दुः या सा क्षौमाम्बराढ्या त्रिभुवननमिता षड्भुजा सत्रिनेत्रा ॥ सिद्धाढ्यां शिवमोहिनीं करलसत्पाशांकुशां भैरवीं भक्ताभीष्टफलप्रदां सकुशलां संसारमोहच्छिदाम् । पीयूषाम्बुधिमन्मथोद्भवरसां संवित् विलासप्रदां वीराराधितपादुकां स्वविजयां ध्यायेज्जगन्मोहिनीम् ॥ वन्दे मुण्डकरां प्रतप्तनयनां वन्दे महातामसीं वन्दे चण्डहरां नृमुण्डकलितां वन्दे महायोगिनीम् । वन्दे दण्डधरां महेशतरुणीं वन्दे महाकिशोरीं वन्दे पिण्डधरां करालरसनां

वन्दे महाकालिकाम् ॥ ॐ ऐं ब्राह्म्यै नमः ब्राह्मीश्रीपादुकां पू० त० । ॐ ह्रीं माहेश्वर्यै नमः पू० त० । ॐ क्लीं कौमार्यै नमः पू० त० । ॐ ह्रीं वैष्णव्यै पू० त० । ॐ लृं वाराह्यै नमः पू० त० । ॐ क्ष्म्यों नारसिंह्यै नमः पू० त० । ॐ लं ऐन्द्रै नमः पू० त० । ॐ ख्यें चामुण्डायै नमः पू० त० । ॐ ह्रीं लक्ष्म्यै नमः पू० त० । चतुर्थावरणदेवताः पू० त० सन्तु । अभीष्ट------। चतुर्थावरणार्चनम् ॥ <u>पंचमावरणम्-</u> ध्यानम्- धवलरुचिरथाब्जे सूपविष्टा द्विबाहुः गजवरमधिरूढा सांकुशा पाशहस्ता । तुहिनविमलहारैर्भूषिता षष्टिदीर्घा त्रिदशविततिराख्या योजनानां पुरन्ध्री ॥ त्वं काली त्वं च तारा त्वमसि च भुवना षोडशी भैरवी त्वं श्यामा धूमावती त्वं प्रलयजलधरां च्छिन्नमस्ता त्वमेव । मातंगी मन्दहासा त्वमपि च वगला शत्रुसंहारकर्त्री त्वं दुर्गा राजलक्ष्मीस्त्वमसि च कमला चण्डिका त्वं नमस्ते ॥ सद्यश्छिन्नशिरः कृपाणमभयं हस्तैर्वरं बिभ्रतीं घोरास्यां शिरसःस्रजां सुरुचिरामुन्मुक्तकेशावलीम् । सृक्कासृक्प्रवहां श्मशाननिलयां

नृत्योत्सवालंकृतीं श्यामांगीं कृतमेखलां शवकरैः देवीं भजे कालिकाम् ॥ ॐ विं विष्णुमायायै नमः विष्णुमायाशक्तिश्रीपादुकां पू० त० । ॐ चें चेतनायै नमः पू० त० । ॐ बुं बुद्ध्यै नमः पू० त० । ॐ निं निद्रायै नमः पू० त० । ॐ क्षुं क्षुधायै नमः पू० त० । ॐ छां छायायै नमः पू० त० । ॐ शं शक्त्यै नमः पू० त० । ॐ तं तृष्णायै नमः पू० त० । ॐ क्षां क्षान्त्यै नमः पू० त० । ॐ जां जात्यै नमः पू० त०। ॐ लं लज्जायै नमः पू० त० । ॐ शां शान्त्यै नमः पू० त० । ॐ श्रं श्रद्धायै नमः पू० त० । ॐ कां कान्त्यै नमः पू० त० । ॐ लं लक्ष्म्यै नमः पू० त० । ॐ धृं धृत्यै नमः पू० त० । ॐ वृं वृत्यै नमः पू० त० । ॐ श्रुं श्रुत्यै नमः पू० त० । ॐ स्मृं स्मृत्यै नमः पू० त० । ॐ दं दयायै नमः पू० त० । ॐ तुं तुष्ट्यै नमः पू० त० । ॐ पुं पुष्ट्यै नमः पू० त० । ॐ मां मातृभ्यो नमः पू० त० । ॐ भ्रां भ्रान्त्यै नमः पू० त० । पंचमावरणदेवताः पू० त० सन्तु । अभीष्ट-----। पंचमावरणार्चनम् ॥ षष्ठावरणम् – ध्यानम- कनकफलकरा

स्त्री पञ्चगव्यूतिवृत्ता सितरुचिरमृतार्द्रा हारिहाराभिरामा । द्विगुणधरणिबिम्बे हंसगा योजनानां दशपरिणतमूर्तिः पुष्टिदा स्यात् त्रिमूर्तिः ॥ नीलोत्पलानां श्रियमावहन्तीं कान्त्या कटाक्षैः कमलाकराणाम् । कदम्बमालाञ्चितकेशपाशां मातंगकन्यां हृदि भावयामि ॥ दक्षे कालीं कपालीं विषदतनुधरां मेघवर्ण्णां महेशीं मध्ये लक्ष्मीं सुपात्रीं कनकविलसितां विष्णुवामे वसन्तीम् । वामे वाणीं प्रमाणीं तरलरसमयीं ब्रह्मकान्तां सुरेशीं उर्ध्वे गौरीं कुमारीं सकलसुखकरीं चण्डिकामाश्रयामि ॥ ॐ गं गणपतये नमः गणपतिश्रीपादुकां पू० त० । ॐ क्षं क्षेत्रपालाय नमः पू० त० । ॐ वं वटुकाय नमः पू त० । ॐ यां योगिनीभ्यो नमः पू० त० । षष्ठावरणदेवताः प० त० सन्तु । अभीष्ट-----। षष्ठआवरणार्चनम् ॥ सप्तमावरणम् ध्यानम्- अमृतकिरणगौरी नक्रपंकेरुहो वो धवलकमलपाशौ बिभ्रती वारिविम्बे । विविधविषरुजार्तिं ध्वंसयन्ती विभूत्यै भुवनविततिरस्तु क्षीरपीयूषमूर्तिः ॥ शुभ्रां

स्वच्छविलेपमास्यवसनां शुभ्रांशुखण्डोज्ज्वलां व्याख्यामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजैः । बिभ्राणां कमलासनं कुचलतां वाग्देवतां सस्मितां वन्दे वाग्विभवप्रदां त्रिनयनां सौभाग्यसंपत्करीम् ॥ शंखं चर्मधनुःकपालमुसले मुष्टिं गदामंकुशं चक्रं खड्गशरौ त्रिशूलकुलिशप्रासाग्निपाशान् भुजैः । त्र्यक्षं सा दधतीं स्मरेत् घननिभां व्याघ्राजिनाभास्वरं सिंहस्थामहिभूषणां रिपुवधे शाद्र्दूलविक्रीडिताम् ॥ ॐ लां इन्द्राय नमः इन्द्रशक्तिश्रीपादुकां पू० त० । ॐ रं अग्नयेनमः पू० त० । ॐ यं यमाय नमः पू० त० । ॐ क्षं निर्ऋतये नमः पू० त० । ॐ वं वरुणाय नमः पू० त० । ॐ यं वायवे नमः पू० त० । ॐ सं सोमाय नमः पू० त० । ॐ ईं ईशानाय नमः पू० त० । ॐ बं ब्रह्मणे नमः पू० त० । ॐ ह्रीं अनन्ताय नमः पू० त० । सप्तमावरणदेवताः पू० त० सन्तु । अभीष्ट------। सप्तमावरणार्चनम् ॥ अष्टमावरणम्- ध्यानम्- वरांकुशौ पाशमभीतिविद्यां करैर्वहन्तीं कमलासनस्थाम् । बालार्ककोटिप्रतिमां त्रिनेत्रां भजेऽहमाद्यां भुवनेश्वरीं ताम् ॥

शब्दब्रह्ममयी चराचरमयी ज्योतिर्मयी वाङ्मयी नित्यानन्दमयी निरंजनमयी तत्त्वमयी चिन्मयी । तत्त्वातीतमयी परात्परमयी मायामयी श्रीमयी सर्वैश्वर्यमयी सदाशिवमयी विद्यामयी पातु माम् ॥ पद्मासनस्थां करपंकजाभ्यां रक्तोत्पले संदधतीं त्रिनेत्राम् । आबिभ्रतीमाभरणानि रक्तां पद्मावतीं पद्ममुखीं नमामि ॥ ॐ वं वज्राय नमः वज्रशक्तिश्रीपादुकां पू० त० । ॐ शं शक्तये नमः पू० त० । ॐ दं दण्डाय नमः पू० त० । ॐ खं खड्गाय नमः पू० त० । ॐ पां पाशाय नमः पू० त० । ॐ अं अंकुशाय नमः पू० त० । ॐ गं गदायै नमः पू० त० । ॐ त्रिं त्रिशूलाय नमः पू० त० । ॐ पं पद्माय नमः पू० त० । ॐ चं चक्राय नमः पू० त० । अष्टमावरणदेवताः पू० त० सन्तु । अभीष्ट------। अष्टमावरणार्चनम् ॥ नवमावरणम् – ध्यानम्- रक्तामश्वाधिरूढां शशधरशकलां वद्धमौलित्रिनेत्रां पाशेनाबद्धसाध्यां स्मरशरविवशां दक्षिणेनानयन्तीम् । हस्तेनान्येन वेत्रं वरकनकमयं धारयन्तीं मनोज्ञं देवीं

ध्यायेदजस्रं कुचभरनमितां दिव्यहाराभिराम् ॥ रक्तां विचित्रवसनां नवचन्द्रचूडामन्नप्रदाननिरतां स्तनभारनम्राम् । नृत्यन्तमिन्दुशकलाभरणां विलोक्य हृष्टां भजे भगवतीं भवदुःखहन्त्रीम् ॥ एकान्ते योगिवृन्दैः प्रशमितकरणैः क्षुत्पिपासाविमुक्तैः सानन्दं ध्यानयोगात् विसगुणसदृशी दृश्यते चित्तमध्ये । या देवी हंसरूपा भवभयहरणं साधकानां विधत्ते सा नित्यं नन्दरूपा त्रिभुवनजननी मोदमाविष्करोतु ॥ ॐ वज्रहस्तायै गजारूढायै कादम्बरीदेव्यै नमः कादम्बरीदेवीशक्तिश्रीपादुकां पू० त० । ॐ शक्तिहस्तायै अजवाहनायै उल्कादेव्यै नमः पू० त० । ॐ दण्डहस्तायै महिषारूढायै करालीदेव्यै नमः पू० त० । ॐ खड्गहस्तायै शववाहनायै रक्ताक्षीदेव्यै नमः पू० त० । ॐ पाशहस्तायै मकरवाहनायै श्वेताक्षीदेव्यै नमः पू० त० । ॐ अंकुशहस्तायै मृगवाहनायै हरिताक्षीदेव्यै नमः पू० त० । ॐ गदाहस्तायै सिंहारूढायै यक्षिणीदेव्यै नमः पू० त० । ॐ शूलहस्तायै वृषभवाहनायै कालीदेव्यै नमः पू० त० । ॐ पद्महस्तायै

हंसवाहनायै सुरज्येष्टादेव्यै नमः पू० त० । ॐ चक्रहस्तायै सर्पवाहनायै सर्पराङ्गीदेव्यै नमः पू० त० । नवमावरणदेवताः पू० त० सन्तु । अभीष्ट-------। नवमावणार्चनम् ॥ धूपः- वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः । मया निवेदितं भक्त्या धूपोऽयं प्रतिगृह्यताम् ॥ आचमनं दद्यात् । दीपः- घृतवर्तिसमायुक्तं चन्दनागरुभासितम् । दीपं दास्यामि देवेशि सुप्रीता भव सर्वदा ॥ आचमनं दद्यात् । नैवेद्यम्- शर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् । उपहारसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ लड्डुकम्- लड्डुकं परमं रम्यं शर्करादिभिःनिर्मितम् । मया निवेदितं भक्त्या गृहाण परमेश्वरि ॥ मोदकम्- मोदकं स्वादु संयुक्तं विजयापरिपूरितम् । प्रफुल्लजनकं मिष्टं गृहाण परमेश्वरि ॥ पिष्टकम्- तण्डुलैः रचितं मिष्टं नानारूपैः विनिर्मितम् । पिष्टकं विविधं देवि गृहाण परमेश्वरि ॥ पायसम्- पायसं परम्यं रम्यं स्फीतं फेनसमन्वितम् । कर्पूरेण समायुक्तं गृहाण परमेश्वरि ॥ आमान्नम्- अमान्नं घृतसंयुक्तं

रसैःषड्भिः समन्वितम् । मया निवेदितं भक्त्या गृहाण परमेश्वरि ॥ पानीयजलम्- लवंगकर्पूरैः युक्तं जातीफलसितान्वितम् । मधुरं मधुना योज्यं पानीयं प्रतिगृह्यताम् ॥ प्रपानकम्- तुष्टिपुष्टिकरं दिव्यमाहारं सर्वदेहिनाम् । गृहाण वरदाऽचिन्त्यं पानं भक्त्या मयार्पितम् ॥ आचमनम्- गंगाजलं समानीतं सुवर्णकलशे स्थितम् । आचम्यतां सुरश्रेष्ठि शुद्धमाचमनीयकम् ॥ ताम्बुलम्- पुगीफलसमायुक्तं पानपत्रेण योजितम् । कर्पूरचन्दनैःलिप्तं ताम्बुलं प्रतिगृह्यताम् ॥ आचमनं दद्यात् । अखण्डऋतुफलम्- इदं फलं मया देवि स्थापितं पुरतः तव । तेन मे सफलावाप्तिर्भवेत्जन्मनि जन्मनि ॥ दक्षिणा- न्यूनातिरिक्तपूजायां संपूर्णफलहेतवे । दक्षिणां ते प्रदास्यामि स्थापयामि तवाग्रतः ॥ आरात्रिकम्- कर्पूरवर्तिभिर्दीप्तैर्मुखनिराजनं तव । कल्पयामि सुरेशानि गृहाणारार्त्रिकं शिवे ॥ ॐ इदं हविः प्रजननं मे अस्तु दशवीरँ स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि ।

अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतोऽअस्मासु धत्त ॥ ॐ आ रात्रि पार्थिवगुं रजः पितुरप्रायि धामभिः । दिवः सदागुंसि बृहती वितिष्ठस आत्वेषं वर्तते तमः ॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदावसन्तं हृदयारविन्दे भवं भवानि सहितं नमामि ॥ पुष्पांजलिः-नानासुगन्धपुष्पाणि यथाकालोद्भवानि च । पुष्पांजलिमिदं देवि गृहाण परमेश्वरि ॥ ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ॐ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कूर्महे । स मे कामान् कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु । कुवेराय वैश्रवणाय महाराजाय नमः ॥ ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् । सार्वभौमः सार्वायुषान्तादापरार्धात् पृथिव्यै समुद्रपर्यन्तायै एकराडिति । मरुतपरिवेष्टारो मरुत्तस्याऽवसन् गृहे । आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासदः ॥ ॐ विश्वतश्चक्षुरुत विश्वतो मुखो

विश्वतो बाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एक ॥ प्रदक्षिणम्- यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्तु प्रदक्षिणं पदे पदे ॥ आत्मसमर्पणम्- पुष्पाणि सन्तु तव देवि मदिन्द्रियाणि धूपो गुरुर्वपुरिदं हृदयं प्रदीपः । प्राणाः हवींषि करणानि नवाक्षतास्ते पूजाफलं व्रजतु साम्प्रतमेषः जीवः ॥ वाञ्छामि नाहमपि सर्वरसाधिपत्यं नेच्छे पुरन्दरपदं न पदं विधातुः । भूयो भवामि यदि जन्मनि जन्मनि स्यां त्वत्पादपंकजलसन्मकरन्दभृंगः ॥ जन्मानि सन्तु मम देवि शताधिकानि माया च मे विशतु चित्तमबोधहेतुः । किन्तु क्षणार्धमपि त्वच्चरणारबिन्दान्मापैतु मे हृदयमीशि नमो नमस्ते ॥ साष्टांगं प्रणमेत् । अष्टोत्तरशतनामानि- ॐ श्रीचामुण्डायै नमः । एवं श्रीसप्रणव चतुर्थ्यन्तेन । महामायायै । श्रीमत्सिंहासनेश्वर्यै । विद्यावेद्यमहिमायै । चक्रपुरवासिन्यै । कंठदयितायै । गौर्यै । गिरिजायै । भुवनेश्वर्यै । महाकाल्यै । १०। महालक्ष्म्यै । महावाण्यै । मनोन्मन्यै ।

सहस्रशीर्षसंयुक्तायै । सहस्रकरमण्डितायै । कौसुम्भवसनोपेतायै । रत्नकंचुकधारिण्यै । गणेशस्कन्दजनन्यै । जपाकुसुमभासुरायै । उमायै ।२०। कात्यायिन्यै । दुर्गायै । मन्त्रिण्यै । दण्डिन्यै । जयायै । करांगुलिनखोत्पन्ननारायणदशाकृत्यै । सचामररमावाणीसव्यदक्षिणसेवितायै । इन्द्राक्ष्यै । बगलायै । बालायै । ३०। चक्रेश्वर्यै । विजयाम्बिकायै । पंचप्रेतासनारूढायै । हरिद्राकुंकुमप्रियायै । महाबलाद्रिनिलयायै । महिषासुरमर्दिन्यै । मधुकैटभसंहर्त्र्यै । मधुरापुरनायिकायै । कामेश्वर्यै । योगनिद्रायै ।४०। भवान्यै । चण्डिकायै । सत्यै । चक्रराजरथारूढायै । सृष्टिस्थित्यन्तकारिण्यै । अन्नपूर्णायै । ज्वलत्जिह्वायै । कालरात्रिस्वरूपिण्यै । निशुम्भशुम्भदमन्यै । रक्तबीजनिषूदिन्यै । ५०। ब्राह्म्यादिमातृकारूपायै । शुभायै । षट्चक्रदेवतायै । मूलप्रकृतिरूपायै । आर्यायै । पार्वत्यै । परमेश्वर्यै । विन्दुपीठकृतावासायै । चन्द्रमण्डल्मध्यस्थायै ।

चिदाग्निकुण्डसंम्भुतायै । ६०। विन्ध्याचलनिवासिन्यै । हयग्रीवागस्त्यपूज्यायै । सूर्यचन्द्राग्निलोचनायै । जालन्धरपीठस्थायै । शिवायै । दाक्षायिण्यै । ईश्वर्यै । नवावरणसंपूज्यायै । नवाक्षरमनुस्तुतायै । नवलावण्यरूपायै ।७०। द्वात्रिंशत्ज्वलतायुधायै । कामेशबद्धमांगल्यायै । चन्द्ररेखाविभूषितायै । चराचरजगद्रूपायै । नित्यक्लिनायै । अपराजितायै । औड्यानपीठनिलयायै । ललितायै । विष्णुसोदर्यै । दंष्ट्राकरालवदनायै । ८०। वज्रधारिण्यै । वह्निवासिन्यै । सर्वमंगलरूपायै । सच्चिदानन्दविग्रहायै । अष्टादशसुपीठस्थायै । भेरुण्डायै । भैरव्यै । परायै । रुण्डमालालसत्कण्ठायै । भण्डासुरविमर्दिन्यै ।९०। पुण्ड्रेक्षुकाण्डकोदण्डायै । पुष्पवाणलसत्करायै । शिवदूत्यै । वेदमात्रे । शांकर्यै । सिंहवाहिन्यै । चतुःषष्ट्युपचाराढ्यायै । योगिनीगणसेवितायै । वनदुर्गायै । भद्रकाल्यै । १००। कदम्बवनवासिन्यै । चण्डमुण्डशिरःछेत्र्यै । महाराज्ञ्यै ।

सुधामय्यै । चक्रवरताटंकायै । शैलभ्रमराम्बिकायै । राजराजवरदायै । श्रीमत्त्रिपुरसुन्दर्यै ।१०८।

नवपत्रिकापूजा – रम्भाकचुहरिद्राश्च जयन्ती विल्वदाडिमौ । अशोकः माणकश्चैव धान्यं च नवपत्रिकाः ॥ एतानेकीकृत्य श्वेतापराजितालतायां त्रिधा वेष्टनम् । हस्ते पुष्पं गृहीत्वा नवपत्रिकासु दुर्गां ध्यायेत् – ध्यायेत्सुवर्णवर्णाभां त्रिनेत्रां चारुहासिनीम् । सर्वलक्षणसंपूर्णामर्धेन्दुकृतशेखराम् । चतुर्भुजां शंखचक्रधरां बालास्वरूपिणीम् । उद्यत्त्रिशूलनिभिन्नमहिषासिंहवाहिनीम् । मुक्तादामलसत्कण्ठां मुनिभिः स्तुतिपाठकै । सिद्धैः देवगणैर्जुष्टां कुमारीभिश्च सेविताम् । सर्वकामप्रदां दुर्गां वरदां भक्तवत्सलाम् । नीलं हयं समधिरुह्य पुरः प्रयान्तीं नीलांशुकाभरणमाल्यविभूषितांगीम् । निद्रापुटेन भुवनानि तिरोदधाना खड्गायुधा भगवती परिपातु भक्तान् ॥ चामुण्डां चण्डहासां प्रकटितदशनां भीमवक्त्रां त्रिनेत्रां नीलाम्भोजप्रभाभां प्रमुदितवपुषां नारमुण्डालिमालाम् ।

खड्गं शूलं कपालं नरशिरघटितं खेटकं धारयन्तीं प्रेतारूढां प्रमत्तां मधुमदमुदितां भावयेच्चण्डरूपाम् ॥ रम्भा –हस्ते पुष्पं गृहीत्वा श्रीरम्भां ध्यायेत्- ॐ रम्भाख्या रम्भारूपा त्वं सुशोभिता । हृदि मूर्तिमिमां नित्यं कुरु देवि नमोऽस्तुते ॥ ॐ रम्भाधिष्ठात्र्यै ब्रह्माण्यै नमः । आवाहयामि । पञ्चोपचारैः पूजयेत् । प्रार्थना –दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय । रम्भारूपेण सर्वत्र शान्तिं कुरु नमोऽस्तुते ॥ कचु- कालिकेति समाख्याता कचुवृक्षेषु संस्थिता । महिषासुरनाशाय कचुरूपे नमोऽस्तुते ॥ ॐ कच्वधिष्ठात्र्यै कालिकायै नमः । प्रार्थना – महिषासुरयुद्धेषु कच्वीभूतासि सुव्रते । मम विघ्नविनाशाय प्रसीद त्वं हरप्रिये ॥ हरिद्रा- हरिद्रे वरदे देवि सदा त्वं शंकरप्रिये । हरिद्रारूपेण देवि सुखशान्ती प्रयच्छ मे ॥ हरिद्राधिष्ठात्र्यै दुर्गायै नमः । प्रार्थना – हरिद्रे वरदे देवि उमारूपासि सुव्रते । मम विघ्नविनाशाय प्रसीद त्वं हरप्रिये ॥ जयन्ती –जयन्ती च यदा लोके विजया सर्वकर्मसु । जयाख्या त्रिषुलोकेषु जयादेवि नमोऽस्तुते ॥ जयन्त्यधिष्ठात्र्यै कौमार्यै

नमः । प्रार्थना –निशुम्भशुम्भमथने सेन्द्रैर्देवगणैः सह । जयन्ती पूजितासि त्वमस्माकं वरदा भव ॥ विल्वः- श्रीफले श्रीफलोपेते सर्वदा मंगलप्रिये । शिवप्रियकरो नित्यं प्रसीद परमेश्वरि ॥ ॐ विल्वधिष्ठात्र्यै शिवायै नमः । प्रार्थना – महादेवप्रियकरो  वासुदेवप्रियः सदा । उमाप्रीतिकरो वृक्षो विल्ववृक्षो नमोऽस्तुते ॥ दाडिमः –दाडिमवृक्षरूपा त्वं शुभदायुप्रदा सदा । प्रयच्छसि परां सिद्धिं दाडिमिं त्वा नमाम्यहम् ॥ ॐ दाडिम्यधिष्ठात्र्यै रक्तदन्तिकायै नमः । प्रार्थना – दाडिम त्वं पुरा युद्धे रक्तबीर्यस्य सम्मुखे । उमाकार्यकरो यस्मात् तस्मात्वं रक्षमां सदा ॥ अशोकः – अशोक वृक्षराजस्त्वं सर्वदा शोकनाशकः । दुर्गाप्रीतिकरो धन्यः अशोकाय नमोनमः ॥ ॐ अशोकाधिष्ठात्र्यै शोकरहितायै नमः । प्रार्थना – हरप्रीतिकरो वृक्षः अशोकः शोकनाशनः । दुर्गाप्रीतिकरो यस्मात् मामशोकं सदा कुरु ॥ माणकः – माणपत्रे वसेद्देवि माणवृक्षाश्रिते शिवे । मम शान्तिप्रदानाय पूजां गृह्ण नमोऽस्तुते ॥ मानाधिष्ठात्र्यै

चामुण्डायै नमः । प्रार्थना –यस्य पत्रेवसेद्देवी मानवृक्षः शचीप्रियः । मम चानुग्रहार्थाय पूजां गृह्ण प्रसीद मे ॥ धान्यम्- जगतां प्राणरक्षार्थं ब्रह्मणा निर्मितं पुरा । उमाप्रीतिकरं धान्यं पूजेऽयं प्रतिगृह्यताम् ॥ धान्यधिष्ठात्र्यै महालक्ष्म्यै नमः । प्रार्थना – धान्यं त्वं धनरूपासि मानरूपासि सुव्रते । धनधान्यप्रदे देवि दुर्गे देवि नमोऽस्तुते ॥ अपराजिता – राजिता त्रिषुलोकेषु विजये परमेश्वरि । तथापराजितं लोके कुरु मां देवि ते नमः ॥ ॐ अपराजितायै नमः । प्रार्थना – सर्ववशंकरि देवि महावैष्णवि सुव्रते । अपराजितं मां नित्यं कुरु देवि नमोनमः ॥ ॐ नवपत्रिकावासिन्यै दुर्गायै नमः । यथोपचारैः पूजयित्वा प्रार्थयेत् –पत्रिके नवदुर्गे त्वं महादेवि मनोरमे । पूजां समस्तां संगृह्य रक्षमां त्रिदशेश्वरि ॥ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि । यशो देहि धनं देहि सर्वान् कामांश्च देहि मे ॥ जयन्ती मंगला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तुते ॥ दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनी । पूजयामि सदा भक्त्या दुर्गां

दुर्गतिनाशिनीम् ॥ भूतप्रेतपिचाचेभ्यो रक्षेभ्यश्च महेश्वरि ।
देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा ॥